॥ षण्मिथ्याविद्याः ॥

उपकाराय या पुंसां न परस्य न चात्मनः ।
ग्रन्थसञ्चयसम्भारैः किं तया भारविद्यया ॥ १॥

अन्यायः प्रौढवादेन नीयते न्यायतां यया ।
न्यायश्चान्यायतां लोभात् किं तया क्षुद्रविद्यया ॥ २॥

अनुष्ठानेन रहिता पाठमात्रेण केवलम् ।
रञ्जयत्येव या लोकं किं तया शुकविद्यया ॥ ३॥

गोप्यते या बुधस्याग्रे मूर्खस्याग्रे प्रकाश्यते ।
न दीयते च शिष्येभ्यः किं तया शठविद्यया ॥ ४॥

परमात्सर्यशूलिन्या व्यथा सञ्जायते यया ।
सुखनिद्रापहारिण्या किं तया शूलविद्यया ॥ ५॥

परसूक्तापहारेण स्वसुभाषितवादिना ।
उत्कर्षः ख्याप्यते यस्याः किं तया चौरविद्यया ॥ ६॥